दुःखितरस्त्यादिदेहः केवलपुण्यापचयमात्रकृतो न भवति, मूर्तिमत्त्वात्, यथा पुण्योत्कर्षे तज्जन्योऽनुत्तरसुर चक्रवर्त्यादिदेहः, यश्च पुण्यापचयमात्रजन्यः स मूर्तिमानपि न भवति, यथा न कोऽपि, यदि च पुण्यापचयमात्रेण देहो जन्येत, तदा हीनतरः शुभ एव च स्यात्, कथं महान्, अशुभतरश्च भवेत्, महतो महापुण्योपचयजन्यत्वात्, अशुभस्य चाशुभकर्मनिर्वर्त्यत्वात् ? । पुण्येन पुनर णीयसापि शुभ एव देहो जन्येत, न तु दुःखितः । अणीयसापि हि सुवर्णलवेनाणीयानपि सौवर्ण एव घटो भवति न तु मार्तिकः, ताम्रादिर्वेति ॥ १९३३ ॥

अथ केवलपापपक्षं सकीर्णपुण्यपापपक्षं च दूषयितुमाह—

एवं चिय विवरीयं जोएज्जा सव्वपावपक्खे वि । न य साहारणरूवं कम्मं तक्कारणाभावा ॥ १९३४ ॥

'सर्वं पापमेवास्ति, न तु पुण्यम्, पापापचयमात्रजन्यत्वात् सुखस्य' इत्येतस्मिन्नपि पक्षे एवमेव- केवलपुण्यवादोक्तदूषणात् विपरीतगत्या सर्वं योजयेत्; यथया- पापापकर्षमात्रजनितं सुखं न भवति, पापस्याल्पीयसोऽपि दुःखजनकत्वात् । न ह्यणीयानपि विपलवः स्वास्थ्यहेतुर्भवति । तस्मात् पुण्यजनितमेवाल्पमपि सुखमित्यादि स्वधिया भ्यूह्य वाच्यम् । इति पृथग् दु सयो कारणभूते स्वतन्त्रे पुण्य-पापे एष्टव्ये । अत एव साधारणे अपि सकीर्णे पुण्य पापे नैष्टव्ये । कुतः ? इत्याह- 'न येत्यादि' न च साधारणरूपं संकीर्णस्वभावं पुण्य पापात्मकमेकं कर्मास्ति, तस्यैवंभूतस्य कर्मणः कारणाभावात् । अत्र प्रयोगः- नास्ति सकीर्णोभयरूपं कर्म, असंभाव्यमानैवंविधकारणत्वात्, वन्ध्यापुत्रवदिति ॥१९३४॥

हेतोरसिद्धतां परिहरन्नाह—

कम्मं जोगनिमित्तं सुभोऽसुभो वा स एगसमयम्मि । होज्ज न उ उभयरूवो कम्मं पि तओ तयणुरूवं ॥१९३५॥

मिथ्यात्वाऽविरति प्रमाद-कषाययोगा बन्धहेतव इति पर्यन्ते योगाभिधानात् सर्वत्र कर्मबन्धहेतुत्वस्य योगाविनाभावात् योगानामेव बन्धहेतुत्वमिति कर्म योगनिमित्तमुच्यते । स च मनो-वाक्-कायात्मको योग एकस्मिन् समये शुभोऽशुभो वा भवत्, न तूभयरूपः, अतः कारणानुरूपत्वात् कार्यस्य कर्मापि तदनुरूपं शुभं पुण्यरूपं बध्यते, अशुभं वा पापरूपं बध्यते, न तु संकीर्णस्वभा वशुभरूपमेकदैव बध्यत इति ॥ १९३५ ॥

---

१ एवमेव विपरीतं योजयेत् सर्वपापपक्षेऽपि । न च साधारणरूपं कर्म तत्कारणाभावात् ॥ १९३४ ॥

२ कर्म योगनिमित्तं शुभोऽशुभो वा स एकसमये । भवेद् न तूभयरूपं कर्मापि तदस्तदनुरूपम् ॥ १९३५ ॥